॥ श्रीललिताऽष्टोत्तरशतनामदिव्यस्तोत्रम् ॥

॥ श्रीः ॥

॥ अथ श्रीललिताऽष्टोत्तरशतनामदिव्यस्तोत्रम् ॥

शिवप्रियाशिवाराध्या शिवेष्टा शिवकोमला ।
शिवोत्सवा शिवरसा शिवदिव्यशिखामणिः ॥ १॥

शिवपूर्णा शिवघना शिवस्था शिववल्लभा ।
शिवाभिन्ना शिवार्धाङ्गी शिवाधीना शिवंकरी ॥ २॥

शिवनामजपासक्ता शिवसांनिध्यकारिणी ।
शिवशक्तिः शिवाध्यक्षा शिवकामेश्वरी शिवा ॥ ३॥

शिवयोगीश्वरीदेवी शिवाज्ञावशवर्तिनी ।
शिवविद्यातिनिपुणा शिवपञ्चाक्षरप्रिया ॥ ४॥

शिवसौभाग्यसम्पन्ना शिवकैङ्कर्यकारिणी ।
शिवाङ्कस्था शिवासक्ता शिवकैवल्यदायिनी ॥ ५॥

शिवक्रीडा शिवनिधिः शिवाश्रयसमन्विता ।
शिवलीला शिवकला शिवकान्ता शिवप्रदा ॥ ६॥

शिवश्रीललितादेवी शिवस्य नयनामृता ।
शिवचिन्तामणिपदा शिवस्य हृदयोज्ज्वला ॥ ७॥

शिवोत्तमा शिवाकारा शिवकामप्रपूरिणी ।
शिवलिङ्गार्चनपरा शिवालिङ्गनकौतुकी ॥ ८॥

शिवालोकनसंतुष्टा शिवलोकनिवासिनी ।
शिवकैलासनगरस्वामिनी शिवरञ्जिनी ॥ ९॥

शिवस्याहोपुरुषिका शिवसंकल्पपूरका ।
शिवसौन्दर्यसर्वाङ्गी शिवसौभाग्यदायिनी ॥ १०॥

शिवशब्दैकनिरता शिवध्यानपरायणा ।
शिवभक्तैकसुलभा शिवभक्तजनप्रिया ॥ ११॥

शिवानुग्रहसम्पूर्णा शिवानन्दरसार्णवा ।
शिवप्रकाशसंतुष्टा शिवशैलकुमारिका ॥ १२॥

शिवास्यपङ्कजार्काभा शिवान्तःपुरवासिनी ।
शिवजीवातुकलिका शिवपुण्यपरंपरा ॥ १३॥

शिवाक्षमालासंतृप्ता शिवनित्यमनोहरा ।
शिवभक्तशिवज्ञानप्रदा शिवविलासिनी ॥ १४॥

शिवसंमोहनकरी शिवसांराज्यशालिनी ।
शिवसाक्षाद्ब्रह्मविद्या शिवताण्डवसाक्षिणी ॥ १५॥

शिवागमार्थतत्त्वज्ञा शिवमान्या शिवात्मिका ।
शिवकार्यैकचतुरा शिवशास्त्रप्रवर्तका ॥ १६॥

शिवप्रसादजननी शिवस्य हितकारिणी ।
शिवोज्ज्वला शिवज्योतिः शिवभोगसुखंकरी ॥ १७॥

शिवस्य नित्यतरुणी शिवकल्पकवल्लरी ।
शिवबिल्वार्चनकरी शिवभक्तार्तिभञ्जनी ॥ १८॥

शिवाक्षिकुमुदज्योत्स्ना शिवश्रीकरुणाकरा ।
शिवानन्दसुधापूर्णा शिवभाग्याब्धिचन्द्रिका ॥ १९॥

शिवशक्त्यैक्यललिता शिवक्रीडारसोज्ज्वला ।
शिवप्रेममहारत्नकाठिन्यकलशस्तनी ॥ २०॥

शिवलालितळाक्षार्द्रचरणांबुजकोमला ।
शिवचित्तैकहरणव्यालोलघनवेणिका ॥ २१॥

शिवाभीष्टप्रदानश्रीकल्पवल्लीकरांबुजा ।
शिवेतरमहातापनिर्मूलामृतवर्षिणी ॥ २२॥

शिवयोगीन्द्रदुर्वासमहिम्नस्तुतितोषिता ।
शिवसम्पूर्णविमलज्ञानदुग्धाब्धिशायिनी ॥ २३॥

शिवभक्ताग्रगण्येशविष्णुब्रह्मेन्द्रवन्दिता ।

शिवमायासमाक्रान्तमहिषासुरमर्दिनी ।
शिवदत्तबलोन्मत्तशुम्भाद्यसुरनाशिनी ॥ २४॥

शिवद्विजार्भकस्तन्यज्ञानक्षीरप्रदायिनी ।
शिवातिप्रियभक्तादिनन्दिभृङ्गिरिटिस्तुता ॥ २५॥

शिवानलसमुद्भूतभस्मोद्धूलितविग्रहा ।
शिवज्ञानाब्धिपारज्ञमहात्रिपुरसुन्दरी ॥ २६॥

इत्येतल्ललितानाम्नामष्टोत्तरशतं मुने ।
अनेकजन्मपापघ्नं ललिताप्रीतिदायकम् ॥ २७॥

सर्वैश्वर्यप्रदं नृणामाधिव्याधिनिवारणम् ।
यो मर्त्यः पठते नित्यं सर्वान्कामानवाप्नुयात् ॥ २८॥

इतिश्रीललितोपाख्याने स्तोत्रखण्डे श्रीललिताष्टोत्तर-
शतनामस्तोत्रं सम्पूर्णम् ॥